३७। कःकरत्करतिकृधिकृतेष्वनदितेः। ८। ३। ५०।

विसर्गस्य सः स्यात्। "प्रदिवो अपस्कः"। "यथा नो वस्यसस्करत्"। "सुपेशसस्करति"। "उरुणस्कृधि"। "सोमं न चारुं मघवत्सु नस्कृतम्। अनदितेरिति किम्? "यथा नो अदितिः करत्"।

३८। पञ्चम्याः परावध्यर्थे। ८। ३। ५१।

पञ्चमीविसर्गस्य सः स्यादुपरिभावार्थे परिशब्दे परतः। "दिवस्परि प्रथमं जज्ञे"। अध्यर्थे किम्? "दिवस्पृथिव्याः पर्योजः"। (क)

३९। पातौ च बहुलम्। ८। ३। ५२।

पञ्चम्या इत्येव। "सूर्यो नो दिवस्पातु"।

---

३७। कः करत करति। कृञो लङ्। मन्त्रे घसेत्यादिना च्लेर्लुक् तिपि गुणः। हल्ङ्यादिलोपः। बहुलं छन्दस्यमाङ्योगेऽपीत्यडभावः। करदिति। कृञ एव लङ् कृमृदृरुहिभ्यश्छन्दसीति च्लेरङ्। ऋदृशोऽङीति गुणः।. करतीति। लट् व्यत्ययेन शप्। कृधीति। लोट् सेर्हिः। श्रुशृणुपॄकृवृभ्यश्छन्दसीति हेर्धिरादेशः। कृत इति। कृञ एव क्तः।

३९। पातौ च। कचित्पठ्यते पतावित। धातुनिर्देश इति। अन्ये तूदाहरणपर्य्यालोचनया लोड्न्तानुकरणं मन्यन्ते।

---

৩৭। কঃ, করৎ, করতি, কৃধি ও কৃত শব্দ পরে থাকিলে বিসর্গ স্থানে স হয়। অদিতি শব্দের উত্তর হয় না। যথা, "প্রদিবো অপস্কঃ"। "যথা নো বস্যসস্করৎ"। "সুপেশস্করতি"। "উরুণস্কৃধি"। "সোমন্ন চারুম্মঘবৎসু নস্কৃতম্"। অদিতিশব্দের উত্তর হইলে কি হইবে? "যথা নো অদিতিঃ করৎ"।

৩৮। উপরিভাবার্থ পরি শব্দ পরে থাকিলে পঞ্চমীর উত্তর বিসর্গ স্থানে স হয়। যথা, "দিবস্পরি প্রথমং জজ্ঞে"। অধ্যর্থ না হইলে কি হইবে? "দিবস্পৃথিব্যাঃ পর্য্যোজঃ"।

৩৯। পাতু শব্দ পরে থাকিলে পঞ্চমীর উত্তর বিসর্গ স্থানে স হয়। যথা, "স্য্যো নো দিবস্পাতু"।

---

(क) पर्योज इति। अत्र परिः सर्वतोभावे।

४० । षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु । ८।३।५३ ।

"वाचस्पतिं विश्वकर्माणम्" । "दिवस्पुत्राय सूर्याय" । "दिवस्पृष्ठं भन्दमानः" । "तमसस्पारमस्य" । "परिवीत इलस्पदे" । "दिवस्पयो दिधिषाणाः" । "रायस्पोषं यजमानेषु" ।

४१ । इडाया वा । ८ । ३ । ५४ ।

पतिपुत्रादिषु परेषु । "इलायास्पुत्रः, इलायाः पुत्रः" । "इलायास्पदे, इलायाः पदे" ।

४२ । निसस्तपतावनासेवने । ८ । ३ । १०२ ।

निसः सकारस्य मूर्द्धन्यः स्यात् । "निष्टप्तं रक्षो निष्टप्ता अरातयः" । अनासेवने किम् ? निस्तपति । पुनः पुनस्तपतीत्यर्थः ।

---

४० । षष्ठ्याः । वाचस्पतिमिति । तत्पुरुषे कृति बहुलमिति षष्ठ्या अलुक् ।

४२ । निसस्तपता । आसेवनं पौनःपुन्यं ततोऽन्यस्मिन्नित्यर्थः ।

---

৪০ । পতি, পুত্র, পৃষ্ঠ, পার, পদ, পয়স্ ও পোষশব্দ পরে থাকিলে ষষ্ঠী বিভক্তির উত্তর বিসর্গ স্থানে স হয় । যথা, "বাচস্পতিং বিশ্বকর্ম্মাণম্" । "দিবস্পুত্রায় সূর্য্যায়" । "দিবস্পৃষ্ঠং ভন্দমানঃ" । "তমসস্পারমস্য" । "পরিবীত ইলস্পদে" । দিবস্পয়ো দিধিষাণাঃ" । "রায়স্পোষং যজমানেষু" ।

৪১ । পতি, পুত্র, পৃষ্ঠ, পার, পদ, পয়স্ ও পোষশব্দ পরে থাকিলে ইড়া শব্দের উত্তর বিসর্গ স্থানে স হয় । যথা, "ইলায়াস্পুত্রঃ", "ইলায়াঃ পুত্রঃ" । "ইলায়াস্পদে", ইলায়াঃ পদে" ।

৪২ । "নিসস্তপতাবনাসেবনে" এই সূত্র দ্বারা নিসের সকারের ষত্ব হয় । যথা, "নিষ্টপ্তং রক্ষঃ" । "নিষ্টপ্তা অরাতয়ঃ" । আসেবনার্থে কি হইবে ? "নিস্তপতি" । অর্থাৎ পুনঃ পুনঃ তাপ প্রদান করিতেছে ।

४३। युष्मत्ततक्षुःष्वन्तःपादम्। ८। ३। १०३।

पादमध्यस्थस्य सस्य मूर्धन्यः स्यात्तकारादिष्वेषु परेषु। युष्मदादेशाः त्वन्त्वातेतवाः। त्रिभिष्ट्वं देव सवितः। तेभिष्ट्वा आभिष्टे। अप्स्वग्ने सधिष्टव। अग्निष्टद्विश्वम्। द्यावापृथिवी निष्टतक्षुः। अन्तःपादं किम्? तदग्निस्तदर्यमा। यन्म आत्मनो मिन्दाभूदग्निस्तत्पुनराहार्जातवेदा विचर्षणिः। अत्राग्निरिति पूर्वपादस्यान्तो न तु मध्यः।

४४। यजुष्येकेषाम्। ८। ३। १०४।

युष्मत्तत्ततक्षुषु परतः सस्य मूर्धन्यो वा। "अर्चिभिष्टम्"। "अग्निष्टे अग्रम्"। "अर्चिभिष्टतक्षुः"। पक्षे अर्चिभिस्त्वमित्यादि।

---

४३। युष्मत्ततक्षुष्विति सकारान्तानुकरणात् परस्य सुप्सकारस्य रुत्व विसर्जनीयस्य शर्व्यवायेऽपीति षत्वम्। ह्रस्वात्तादाविव्यतः तादाविति वर्तते।' तदाह। तकारादिष्विति। एतद्युष्मद एव विशेषणं नेतरयोरव्यभिचारात्। त्वं त्वा ते तवा इति। एतेषामेव संभव इत्यर्थः।

৪৩। তকারাদি অর্থাৎ যুষ্মৎ শব্দ স্থানে আদিষ্ট ত্বং, ত্বা, তে ও তব ও ততক্ষু শব্দ পরে থাকিলে পাদমধ্যস্থ যে সকার, তাহার ষত্ব হয়। যথা, "ত্রিভিষ্টং দেব! সবিতঃ!"। "তেভিষ্টা" আভিষ্টে"। "অপ্স্বগ্নে সধিষ্টব"। "অগ্নিষ্টদ্বিশ্বম্"। "দ্যাবাপৃথিবী নিষ্টতক্ষুঃ"। পাদমধ্যস্থ না হইলে কি হইবে? "তদগ্নিস্তদর্য্যমা"। "যন্ম আত্মনো মিন্দাভূদগ্নিস্তৎ পুনরাহার্জ্জাতবেদা বিচর্ষণিঃ"। এস্থলে অগ্নিঃ পদটী পূর্ব্ব পাদের অন্তে রহিয়াছে, মধ্যে নহে।

৪৪। যুষ্মৎ তৎ ততক্ষু শব্দ পরে থাকিলে পদমধ্যস্থিত সকারের বিকল্পে ষত্ব হয়। যথা, "অর্চ্চিভিষ্টম্"। "অগ্নিষ্টেঽগ্রম্"। "অর্চ্চিভিষ্টতক্ষু"। বিকল্প পক্ষে "অর্চ্চিভিস্ত্বম্"। ইত্যাদি।

* ४५। स्तुतस्तोमयोश्छन्दसि। ८। ३। १०५।

नृभिष्टुतस्य, नृभिः स्तुतस्य। गोष्टोमम्, गोस्तोमम्। पूर्वपदादित्येव सिद्धे प्रपञ्चार्थमिदम्।

४६। पूर्वपदात्। ८। ३। १०६।

पूर्वपदस्थान्निमित्तात्परस्य सस्य षो वा। यदिन्द्राग्नी दिविष्ठः। युवं हि स्थः स्वर्पती।

४७। सुञः। ८। ३। १०७।

पूर्वपदस्थान्निमित्तात्परस्य सस्य सुञो निपातस्य सस्य षः। ऊर्ध्वमूषुणः। अभीषु णः।

४५। स्तुतस्तोमयोः। एतयोः परतः सस्य षत्वं स्यात्। पूर्वपदादित्येव सिद्धमिति। पूर्वं पदं पूर्वपदमिति सामान्यत आश्रियते न तु समासावयव एवेति वाक्येऽपि तेनैव सिद्धं षत्वमिति भावः। ततश्च स्तुतस्तोमग्रहणं प्रपञ्चार्थं छन्दोग्रहणं तूत्तरार्थं कर्तव्यमेव।

---

৪৫। বেদে স্তুত ও স্তোম শব্দের সকারের বিকল্পে ষত্ব হয়। যথা, "নৃভিষ্টুতস্য, নৃভিস্তুতস্য"। "গোষ্টোমম্, গোস্তোমম্"। এস্থলে "পূর্ব্বপদাৎ" এই বক্ষ্যমাণ সূত্র দ্বারা উক্তপদ সিদ্ধ হইত, তথাপি বিস্তারার্থ এই সূত্রটী কৃত হইয়াছে।

৪৬। পূর্ব্বপদস্থ নিমিত্তের পরস্থিত সশব্দের সকারের বিকল্পে ষত্ব হয়। যথা, "যদিন্দ্রাগ্নী দিবি ষ্ঠঃ। যুবাং হি স্থঃ স্বর্পতী"।

৪৭। পূর্ব্বপদস্থ নিমিত্তের পরস্থিত নিপাতসংজ্ঞক সুঞের সকারের ষত্ব হয়। যথা, "ঊর্দ্ধং ঊষুণঃ"। "অভীষুণঃ"।

*। ऊषुण इत्यादि। इकः सुञीति पूर्वपदस्य दीर्घत्वं नस् इत्यादिना णत्व धातुस्थोरुषुभ्य इति णत्वम्।

४८। सनोतेरनः। ८। ३। १०८।

गोषा इन्द्रो नृषा असि। अनः किम्? गोसनिः।

४९। सहेः पृतनर्ताभ्यां च। ८। ३। १०९।

पृतनाषाहम्। ऋताषाहम्। चात्। ऋतीषाहम्।

५०। निव्यभिभ्योऽड्व्यवाये वा छन्दसि।८।३।११९।

सस्य मूर्धन्यः। न्यषीदत्, न्यसीदत्। व्यषीदत्, व्यसीदत्। अभ्यष्टौत्, अभ्यस्तौत्।

५१। छन्दस्यृदवग्रहात्। ८। ४। २६।

ऋकारान्तादवग्रहात्परस्य नस्य णः। नृमणाः। पितृयाणम्।

४८। सनोतेरनः। अनन्तस्य सनोतेः सस्य षः स्यात् गोषा इति। जनसनखनक्रमगमो विट्। विड्वनोरित्यात्वम्। गोसनिरिति। छन्दसि वनिसनिरक्षिमथामितीन् प्रत्ययः।

५०। निव्यभिभ्यो। न रपरेत्यतो नेति वर्तते। तत्र निषेधविकल्पे विधिविकल्प एव फलतीत्याह। मूर्द्धन्यो वा स्यादिति। अभ्यष्टौदिति। उतो वृद्धिर्लुकि हलीति वृद्धिः।

५१। छन्दस्यृदव। अवगृह्यते विच्छिद्य पठ्यते इत्यवग्रहः। ऋच्चासावचग्रहश्च ऋदवग्रहस्तस्मात्। नृमणा इत्यादीति। अत्र संहिताधिकारात्संहिताकालएव एतेषां णत्वं पदकाले वाव-

৪৮। অন্ পরে থাকিলে পূর্ব্বপদস্থ নিমিত্তের পর সন ধাতুর সকারের ষত্ব হয়। যথা, "গোষা ইন্দ্রো নৃষা অসি"। অন্ পরে না থাকিলে কি হইবে? "গোসনিঃ"।

৪৯। পৃতনা ও ঋত শব্দের উত্তর সহ ধাতুর সকারের ষত্ব হয়। যথা, "পৃতনাষাহম্"। "ঋতাষাহম্"। চকার দ্বারা ঋতীশব্দের উত্তর ও সাহশব্দের সকারের ষত্ব হয়। "ঋতীষাহম্"।

৫০। বেদে নি, বি ও অভিপূর্ব্বক সদ ও স্তু ইত্যাদি ধাতুর সকারের বিকল্পে অট্ ব্যবায়ে ষত্ব হয়। যথা, ন্যষীদৎ, ন্যসীদৎ। ব্যষীদৎ, ব্যসীষৎ। অভ্যষ্টৌৎ, অভ্যস্তৌৎ।

৫১। বেদে ঋকারান্ত অবগ্রহের উত্তর নকারের ণত্ব হয়। যথা, "নৃমণাঃ। পিতৃযাণম্"। সমাসে পদান্তকে অবগ্রহ বলে।

५२ । नश्च धातुस्थोरुषुभ्यः । ८ । ४ । २७ ।

धातुस्थात् । अग्ने रक्षा णः । शिक्षाणो अस्मिन् । उरुणस्कृधि । अभीषुणः । मोषुणः ।

इत्यष्टमोऽध्यायः ।

इति सिद्धान्तकौमुद्यां वैदिकप्रकरणम् ।

---

ग्रहः क्रियते । तेनावग्रहयोग्यत्वादकारोऽवग्रह इत्युक्तः न तु तद्भावापन्नः । अत हि नृमना इति पदकालेऽवगृह्यते ।

५२ । नश्च । धातुस्थान्निमित्तादुत्तरस्य उरुशब्दात् षुशब्दाच्च परस्य नस् इत्येतस्य णः स्यात् । धातौ तिष्ठतीति धातुस्थो रेफः षकारश्च । उरु इति स्वरूपग्रहणं षु इति कृतषत्वस्य सुञो ग्रहणं न सप्तमीबहुवचनस्य । तेनेन्द्री धत्ता गृहेषु न इत्यादौ न णत्वमिति नासिकादेशस्य नसादेशस्य च सामान्येन ग्रहणम् । रक्षा ण इति । रक्षेति लोटो मध्यमपुरुषैकवचनात्त्व द्व्यचोऽतस्तिङ इति दीर्घः । उरुणस्कृधीति । कृञो लोट् सेर्हिः श्रुशृणुपृकृवृभ्यश्छन्दसीति हेर्धिः । कःकरदित्यादिना विसर्जनीयस्य सत्वम् । अभीषुण इति । इकः सुञीति दीर्घः । एवमूषुण इत्यत्रापि सर्वत्रोदाहरणे नसादेशो नस् ।

श्रीमन्मौलिकुलतिलकायमानगोवर्द्धनभट्टात्मजरघुनाथभट्टात्मजेन जयकृष्णेन कृतायां सिद्धान्तकौमुदीव्याख्यायां वैदिकप्रकरणं समाप्तम् ।

---

৫২ । বেদে ধাতুস্থ নিমিত্তের পর এবং উরু শব্দ ও যুশব্দের উত্তর নসের নকারের ণত্ব হয় । যথা, "অগ্নে রক্ষা ণঃ" । "শিক্ষাণোঽস্মিন্" । "উরু ণস্কৃধি" । "অভীষুণঃ" । "মোষুণঃ" । ইতি সিদ্ধান্তকৌমুদ্যাং বৈদিকপ্রকরণেঽষ্টমোঽধ্যায়ঃ ।

ইতি শ্রীরামগোপালশর্ম্ম-বিরচিত-বৈদিকপ্রকরণানুবাদঃ সমাপ্তঃ ।

---

বেদেন্দুবসুভূমাব্দে মাঘে শ্রীশপ্রসাদতঃ ।
বৈদিকপ্রক্রিয়াবঙ্গানুবাদোঽয়ং প্রকাশিতঃ ॥

# अथ स्वरप्रकरणम् ।



१ । अनुदात्तं पदमेकवर्जम् । ६ । १ । १५८ ।

परिभाषेयं स्वरविधिविषया । यस्मिन् पदे यस्योदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा शेषं तत्पदम् अनुदात्ताच्कं स्यात् । गोपायतं नः । अत्र सनाद्यन्ता इति धातुत्वे धातुस्वरेण यकाराकार उदात्तः शिष्टमनुदात्तम् । सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वाच्यम् । * । तेनोक्तोदाहरणे गुपेर्धातुस्वरः आयस्य प्रत्ययस्वरश्च

१ । अनुदात्तं पदम् । परिभाषेयमिति । नाधिकारोऽस्वरितत्वात् । आद्युदात्तश्च समानोदरे शयित ओ चोदात्त इत्यादीनामसंग्रहश्च स्यात् । परिभाषाया लिङ्गापेक्षायामाह । स्वरविधीति । सूत्रे अनुदात्तशब्दोऽर्श आद्यजन्तः पदसामानाधिकरण्यात् । अत्रानुदात्तस्य क्रियमाणत्वात् तद्भिन्न उदात्तः स्वरितो वा वर्ज्यत इत्याह । तमेकमिति । यत्तदोर्नित्यसम्बन्धाद्यस्योदात्तस्वरितविधानं तस्यैव वर्जनम् । एकग्रहणं विधीयमानस्योपलक्षणम् । तेन तवै चान्तश्च युगपदिति द्वयोर्वर्जनम् । इन्द्राबृहस्पतीऽत्यत्र देवताद्वन्द्वे चेति सूत्रेण पदद्वयस्यापि प्रकृतिस्वरे विधेये द्वयोर्वर्जनम् । बृहस्पतिशब्दो हि वनस्पत्यादित्वादाद्युदात्त इति स्थितम् । गोपायतमिति । गुप इत्यस्य धातोरित्यन्त उदात्तः । तत आय् प्रत्ययः आद्युदात्तश्चेति प्रत्ययस्वरेणाद्युदात्तः । ततः सनाद्यन्ता इति धातुसंज्ञायां धातोरिति यकाराकार उदात्तः । स च प्रा क्तयोरुदात्तयोः सतोः

১ । এই সূত্রটী স্বরবিধি বিষয়ের পরিভাষা । যে পদে যে বর্ণের স্থানে উদাত্ত বা স্বরিত স্বর বিহিত হয়, সেই স্বরটী ত্যাগ করিয়া অবশিষ্ট যে বর্ণ থাকে, সেই সকল বর্ণের অনুদাত্ত স্বর হয় । যথা, "গোপায়তং নঃ" । এস্থলে "সনাদ্যন্তাঃ" এই সূত্র দ্বারা ধাতুত্ব সিদ্ধি হওয়াতে ধাতুস্বর দ্বারা যকার ও আকারের উদাত্ত স্বর এবং

न श्रियते। अन्यत्रेति किम्? यज्ञं यज्ञमभिवृधे गृणीतः। अत्र सतिशिष्टोऽपि श्ना इत्यस्य स्वरो न शिष्यते किं तु तस एव।

पश्चात्प्रवृत्तत्वात्सति शिष्टः अतो बलवान्। तस्यानुदात्तौ सुप्पितावित्यनेनानुदात्तेन श्नकारेण सह्यातां गुणइति पररूपे कृते एकादेश उदात्तेनोदात्त इत्युदात्तः। थसस्तमादेशः। तस्य तास्यनुदात्तेन्ङिददुपदेशादित्यनेनादुपदेशात्परत्वादनुदात्तत्वम्। तस्य उदात्तादनुदात्तस्येति स्वरितः। नन्वत्र तमिति स्वरितमाश्रित्यानुदात्तं पदमिति परिभाषया शेषनिघातः स्यादिति चेन्मैवम्। अथोद्देशपक्षाश्रयणेनेयं परिभाषा विषाद्यां न प्रवर्ततइत्यत्र ज्ञापकं तन्यतस्त्विं यतीनाव इति च। सति शिष्टेति। यो हि यस्मिन् सति शिष्यते स शिष्टः तस्य बाधको भवतीत्यर्थः। एतच्च सति शिष्टस्य बाधकत्वं न्यायसिद्धं तथा हि उदात्तस्वरितविधिभिरेकवाक्यतामापन्नयाऽनया शेषनिघातः क्रियते तत्रोत्सर्गस्यापवादस्य वा चरमा या प्राप्तिस्तत्रास्या उपस्थाने पूर्वा प्रवृत्तिर्बाध्यते तद्यथा औपगवत्वमित्यत्राण् प्रत्यये त्वप्रत्यये च आद्युदात्तश्चेति प्रवर्तमानं स्वस्यैव प्रथमप्रवृत्तिं बाधते द्वितीयप्रवृत्त्या' लक्ष्यं "परिनिष्ठापयतीति दिक्। ननु यदि सति शिष्टः स्वरो बलीयस्तर्हि सति शिष्टत्वाद्विकरणस्वरोऽपि बलीयः स्यात् तथा च गृणीत इत्यादि मध्योदात्तं पदं स्यादत आह। अन्यत्रेति। सति शिष्टोऽपि विकरणस्वरः प्रत्ययस्वरं न बाधतइत्यर्थः। अत्र च ज्ञापकं तासेः परस्य लसार्वधातुकस्यानुदात्तविधानम्। तथाहि यद्यपि लावस्थायां तासिर्विधीयते तथापि लकारमात्रापेक्षत्वादन्तरङ्गेषु तादेषु च लादेशेषु कृतेषु पश्चात्तासिरिति तत्स्वरस्य सति शिष्टत्वात् शेषनिघातेनैव सिद्धेरनर्थकं तत्स्यात्। गृणीत इति। अन्तोदात्तं पदम् अत्र तास्यनुदात्तेति लसार्वधातुकनिघातो न अदुपदेशेति तकारकरणात् श्नाप्रत्ययस्यादन्तत्वाभावात् तिङ्ङतिङ इति निघातस्तु न भवति यद्वृत्तान्नित्यमिति निषेधात् यद्धि व्यवहितेऽपि प्रवर्त्तते। तस एवेति। तस आद्युदात्तश्चेत्याद्युदात्तः स्वरः शिष्यत इत्यर्थः।

---

অবশিষ্ট বর্ণের অনুদাত্ত স্বর হইল। যদি অবশিষ্ট স্বর বলবান্ হয়, তাহা হইলে বিকরণ ভিন্ন অন্যত্রই উক্ত স্বর হইবে, ইহা বক্তব্য। সেই হেতু উক্ত উদাহরণে গুপি এই ধাতুর স্বর এবং আয়ভাগের প্রত্যয়স্বর অবশিষ্ট থাকিবে না। অন্যত্র বলাতে কি হইল? "যজ্ঞং যজ্ঞমভিবৃধে গৃণীতঃ"। এস্থলে ধাতুর অবশিষ্ট থাকিলেও শ্না প্রত্যয়ের স্বর অবশিষ্ট থাকিল না, তসেরই স্বর অবশিষ্ট থাকিল।

२। अनुदात्तस्य च यत्रोदात्तलोपः। ६। १। १६१।

यस्मिन्ननुदात्ते परे उदात्तो लुप्यते तस्योदात्तः स्यात्। देवीं वाचम्। अत्र ङीबुदात्तः।

३। चौ। ६। १। २२२।

लुप्ताकारेऽञ्चतौ परे पूर्वस्यान्तोदात्तः स्यात्। उदात्तनिवृत्ति-

२। अनुदात्तस्य। देवशब्दोऽच्प्रत्ययान्तत्वाच्चित इत्यन्तोदात्तः पचादिषु देवडिति पाठाट्टिड्ढेति ङीप् तस्यानुदात्तौ सुप्पिताविन्त्यनुदात्तत्वे यस्येति चेत्यकारलोपः। नन्वनुदात्तस्येति व्यर्थं नह्यनुदात्ते स्वरिते वा परे उदात्तलोपोऽस्ति। न च प्रसज्यत इति प्रासङ्गः कर्मणि घञ् कर्षात्वतो घञोऽन्त उदात्त इत्यन्त उपसर्गस्य घञ्यमनुष्ये बहुलमित्युपसर्गस्य दीर्घः न बहुव्रीहि प्रासिताद्यत् तित्स्वरितः तस्मिन् परे यस्येति लोपः अत्र स्वरिते परे उदात्तलोपोऽस्त्येवेति वाच्यम्। स्वरिते हि विधीयमाने परिशिष्टमनुदात्तं पदमेकवर्जमित्यनुदात्तं, तत्कृत उदात्तलोप इति चेत् सत्यम्। मा हि धुक्षातामित्यत्र दुहेर्लुङि आत्मनेपदे आतां शल इगुपधादिति क्सः क्सः आतामित्यस्य तास्यनुदात्तेन्ङिददुपदेशादिति लसार्वधातुकानुदात्तत्वम्। क्सः प्रत्ययस्वरेणोदात्तः क्सस्याचीत्यकारलोपः। अत्र कर्षात्वतो घञोऽन्त उदात्त इत्यतः अन्त इत्यधिकारादन्त्यस्योदात्तत्वं स्यात् सति तस्मिन्नादेर्भवति। ननु यत्रोदात्तलोपस्तन्त्यभाजे कथमन्त्यस्य प्रसङ्गः। न हि तदुदात्तलोपस्य निमित्तमिति चेत्तर्हि आदेरपि न प्राप्नोति। तस्याप्युदात्तलोपं प्रत्यनिमित्तत्वात्। क्सस्याचीत्यजादौ प्रत्यये विधानात् तस्मादत्र प्रत्यय उदात्तलोपस्तस्मिन्नोऽनुदात्तस्योदात्तभवतीति सूत्रार्थेनात्राधिकारादन्त्यस्य प्रसङ्गः यदि तु निमित्तत्वानादरेण यत्रानुदात्ते परत उदात्तो लोपस्तस्योदात्तो भवतीति सूत्रार्थस्तदानुदात्तस्येति न वक्तव्यम्। अन्त्यस्य प्रसङ्गाभावात्। न च मा हि धुक्षातामित्यत्र तिङ्ङतिङ इति निघातः स्यादिति वाच्यम्। चेति निषेधात्।

३। उदात्तनिवृत्तीति। उदुत्तरपदप्रकृतिस्वरेणोदात्तस्याच्चेत्यकारस्याच इति लोपे सति

২। যে অনুদাত্ত স্বর পরে থাকাতে পূর্ব্ববর্ত্তী উদাত্ত স্বরের লোপ হয়, তাহারই উদাত্ত স্বর হয়। যথা, "দেবীং বাচম্"। এস্থলে ঙীপ্ উদাত্ত। কারণ—"অনুদাত্তৌ সুপ্পিতৌ" এই সূত্র দ্বারা ঙীপের অনুদাত্তত্ব সিদ্ধি হইলেও তাহা পরে থাকাতে দেব এই শব্দের উত্তর বিহিত প্রত্যয়ের উদাত্ত স্বরের লোপ হওয়াতে ঙীপের উদাত্তত্ব সিদ্ধি হইতেছে।

৩। যাহার অকার লুপ্ত হইয়াছে এরূপ অঞ্চধাতু পরে থাকিলে পূর্ব্বপদের

स्वरापवाद: । देवद्रीचीं नयत देवयन्त: । अतद्धित इति वाच्यम् ॥*॥ दाधीच: । माधूच: । प्रत्ययस्वर एवात्र ।

४ । आमन्त्रितस्य च । ६ । १ । १९८ ।

आमन्त्रितविभक्त्यन्तस्यादिरुदात्त: स्यात् । अग्न इन्द्र वरुण मित्र देवा: ।

५ । आमन्त्रितस्य च । ८ । १ । १९ ।

पदात्परस्यापादादिस्थितस्यामन्त्रितस्य सर्वस्यानुदात्त: स्यात् ।

अनुदात्तस्य चेति सूत्रेणोदात्त: प्राप्तस्तस्यायमपवाद इत्यर्थ: । देवद्रीचीमिति । देव अच् इति स्थिते विष्वग्देवयोरिति देवशब्दस्याद्रि: आदेश: । उगितश्चेति ङीप् । अच इत्यच्नेरकारलोप: । चाविति दीर्घत्वम् । द्रीतीकार उदात्त: । तत: परस्योदात्तादनुदात्तस्य स्वरित इति स्वरितत्वम् । अतद्धित इति । चौ य: स्वर: स तद्धिते परतो न भवतीत्यर्थ: । अन्यथा देवद्रीचीमित्यादौ यथादात्तनिवृत्तिस्वरं बाधते तथा दाधीच इत्यादौ प्रत्ययस्वरमपि सति शिष्टस्वरो बाधेत । तस्मादतद्धित इति वक्तव्यम् । अस्मिंश्च सति उदात्तनिवृत्तिस्वरस्यायमपवाद इति फलितम् । दाधीच इति । दधि अच् अण् इति स्थितेऽण्स्वरउदात्तत्वे ऽतोऽच इत्यकारलोप: । तत: सति शिष्टत्वाच्चाविति स्वर: प्राप्तो निषिध्यते तथा चाण्प्रत्ययस्वरेणैव व्यवस्था । तदाह । प्रत्ययस्वर एवात्रेति ॥

४ । अग्न इत्यादि । सामन्त्रितमित्यनेनामन्त्रितत्वम् ॥

५ । प्रागुक्तपाठस्थेति । आमन्त्रितस्य चेत्यस्य । इममम इति । मेशब्दात्परत्वमाश्रित्य

অন্ত্যবর্ণের উদাত্ত স্বর হয়। এই সূত্রটী উদাত্ত নিবৃত্তি স্বরের অপবাদ। যথা, "দেবদ্রীচীং নয়ত দেবয়ন্তঃ"। তদ্ধিত না হইলেও হইবে ইহা বক্তব্য। •। যথা, দাধীচঃ। মাধূচঃ। এস্থলে কেবল প্রত্যয় স্বর বুঝিতে হইবে।

৪। আমন্ত্রিত অর্থাৎ সম্বোধন বিভক্ত্যন্ত পদের আদি বর্ণের উদাত্ত স্বর হয়। যথা, অগ্নে! ইন্দ্র!! বরুণ! মিত্র! দেবাঃ!।

৫। পদের পরস্থিত অথচ পাদের অন্তস্থিত সমস্ত আমন্ত্রিত পদের অনুদাত্ত

प्रागुक्तस्य षाष्ठस्यापवादोऽयमाष्टमिकः। इमं मे गङ्गे यमुने सरस्वति। अपादादौ किम्? शुतुद्रि स्तोमम्। आमन्त्रितं पूर्वमविद्यमानवत्। अग्न इन्द्र। अत्रेन्द्रादीनां निघातो न। पूर्वस्याविद्यमानत्वेन पदात्परत्वाभावात्। "नामन्त्रिते समानाधिकरणे सामान्यवचनम्"। समानाधिकरणे आमन्त्रिते परे विशेष्यं पूर्वमविद्यमानवन्न। अग्ने तेजस्विन्। अग्ने त्रातः। सामान्यवचनं किम्? पर्यायेषु मा भूत्। अघ्न्ये देवि सरस्वति।

गङ्गे प्रभृतीनां चयाणामनुदात्तः। स च पदपाठे स्पष्टएव। संहितायां तु स्वरितात्संहितायामनुदात्तानामिति वक्ष्यमाणा प्रचयापरपर्याया एकश्रुतिः प्रवर्तते। शुतुद्रीति। षाष्ठेनामन्त्रितस्य चेत्यनेनाद्युदात्तः। आमन्त्रितं पूर्वम्। अग्नइन्द्रेति। सर्वाणि षाष्ठेनाद्युदात्तानि। निघातो नेति। आष्टमिकेनेति भावः। नामन्त्रिते। अत्रोत्तरसूत्रस्थं सामान्यवचनमत्र सम्बन्धनीयमिति भाष्यं तद्व्याचष्टे। विशेष्यमिति। विशेष्यसमर्पकमित्यर्थः। क्वचित्तु नामन्त्रिते समानाधिकरणे सामान्यवचनमिति पाठः। स त्वस्यनुरोधेनेति ज्ञेयम्। तेजस्विन्नित्यादि। अग्ने इत्यस्याविद्यमानत्वात्तेजस्विन्नित्यस्य त्रातरितस्य चाष्टमिकनिघातः। अघ्न्ये देवि सरस्वतीति। तैत्तिरीयके आम्नाये सहस्रमतीं प्रकृत्य इडे रन्ते दिते सरस्वति प्रिये प्रेयसि महि विश्रुति एतानि ते अघ्निये नामानि। वृत्तौ तु इडे काव्ये विहव्ये इति पाठः। स तु शाखान्तरे द्रष्टव्यः। समानाधिकरणग्रहणं पाणिनिमतेऽग्नइन्द्र वरुण इत्यादौ व्यधिकरणनिवृत्त्यर्थम्। भाष्यकृन्मते विस्पष्टार्थं सामान्यवचनापेक्षत्वात्तत्र सामानाधिकरण्यस्यावश्यं स्थितत्वात्।

স্বর হয়। এই আষ্টমিক শব্দ প্রাগুক্ত ষষ্ঠী সূত্রের অপবাদ। যথা, ইমং মে গঙ্গে যমুনে স্বরস্বতি। পাদের আদিতে হইলে কি হইবে? শুতুদ্রি স্তোমম্। আমন্ত্রিত পূর্ব্বপদ অবিদ্যমানবৎ হয়। যথা, অগ্ন ইন্দ্র। এস্থলে ইন্দ্রাদি পদের নিঘাত স্বর হইল না। কারণ ইহাদের (অগ্নে, ইন্দ্র ইত্যাদির) পূর্ব্বে কোন পদ নাই এবং পরেও কোন পদ নাই। আমন্ত্রিত পদ সামানাধিকরণ হইলে সামান্য বচন হইবে না অর্থাৎ সমানাধিকরণ আমন্ত্রিত পদ পরে থাকিলে পূর্ব্বস্থিত বিশেষ্য পদ বিদ্যমানবৎ হয় না। যথা, অগ্নে তেজস্বিন্। অগ্নে ত্রাতঃ। সামান্যবচন না হইলে কি হইবে? পর্য্যায় স্থলে হইবে না। যথা, অঘ্ন্যে দেবি স্বরস্বতি!।

६। सामान्यवचनं विभाषितं विशेषवचने।८।१।७४।

अत्र भाष्यकृता बहुवचनमिति पूरितम्। सामान्यवचनमिति च पूर्वसूत्रे योजितम्। आमन्त्रितान्ते विशेषणे परे पूर्वं बहुवचनान्तमविद्यमानवद्वा। देवीः षड्उर्वीरुरु नः कृणोत। अत्र देवीनां विशेषणं षडिति। देवाः शरण्याः। इह द्वितीयस्य निघातो वैकल्पिकः।

७। सुबामन्त्रिते पराङ्गवत् स्वरे। २। १। २।

सुबन्तमामन्त्रिते परे परस्याङ्गवत् स्यात् स्वरे कर्त्तव्ये। द्रवत्पाणी शुभस्पती। शुभ इति शुभेः क्विबन्तात्। षष्ठ्यन्तस्य परशरीरानुप्रवेशे षाष्ठिकमामन्त्रिताद्युदात्तत्वम्। न चाष्टमिको निघातः शङ्क्यः। पूर्वामन्त्रितस्याविद्यमानत्वेन पादादित्वात्। यत्ते दिवो दुहितर्मर्त्त

६। सामान्य। बहुवचनमिति पूर्वनिषेधस्यास्य विकल्पस्य च विषयविभागार्थम्। देवीः षडिति। अत्र देवीरित्यामन्त्रितं नाविद्यमानवत्। तेन षडित्यस्य निघातः। शरण्याति-शरणं रक्षितृत्वं तत्र साधवः शरण्याः। तत्र साधुरिति यत्। द्वितीयस्येति। षट्शब्दस्य शरण्यशब्दस्य चेत्यर्थः।

७। सुबामन्त्रिते। परस्याङ्गवदिति। तस्यैव परस्यामन्त्रितस्याङ्गवदेकदेशवद्भवति तद्ग्रहणेन गृह्यत इत्यर्थः। षष्ठ्यामन्त्रित। अत्र षष्ठीशब्देन षष्ठ्यर्था विभक्तिरुच्यते। तेन

৬। বিশেষবচন স্থলে সামান্যবচন বিকল্পে হইবে। কিন্তু এস্থলে ভাষ্যকার "বহুবচন" হইবে এইরূপ বলিয়াছেন এবং "সামান্যবচন" এই পদটী পূর্ব্ব সূত্রে যোজিত করিয়াছেন। আমন্ত্রিতান্ত বিশেষণ পদ পরে থাকিলে পূর্ব্বস্থিত বহুবচনান্ত পদ অবিদ্যমানবৎ হয়। যথা, দেবীঃ ষড়ুর্ব্বীরুরু নঃ কৃণোত"। এস্থলে ষড় এই পদটী দেবীশব্দের বিশেষণ। "দেবাঃ শরণ্যাঃ। এস্থলে দ্বিতীয়টীর বিকল্পে নিঘাত স্বর হইবে।

৭। সুবন্ত আমন্ত্রিত পদ পরে থাকিলে স্বরবিধি বিষয়ে সেই পরবর্ত্তী আমন্ত্রিত পদেরই অঙ্গ অর্থাৎ একদেশবৎ কার্য্য হয়। যথা, "দ্রবৎপাণী শুভস্পতী"।

भोजनम्। इह हि दिवः शब्दस्याष्टमिको निघातः। परशुना वृश्चन्। षष्ठ्यामन्त्रितकारकवचनम्॥ * ॥ षष्ठ्यन्तमामन्त्रितान्तं प्रति यत्कारकं तद्वाचकं चेति परिगणनं कर्त्तव्यमित्यर्थः। तेनेह न। अयमग्ने जरिता। एतेनाग्ने ब्रह्मणा। समर्थानुवृत्त्या वा सिद्धम्। पूर्वाङ्गवच्चेति वक्तव्यम्॥ * ॥ आ ते पितर्मरुताम्। प्रति त्वा दुहितर्दिवः। अव्ययानां न॥ * ॥ उच्चैरधीयान। अव्ययीभावस्य त्विष्यते॥ * ॥ उपाग्न्यधीयान।

गोषु स्वामिन्नित्यत्रापि पराङ्गवद्भावः सिध्यति। परशुना वृश्चन्निति। अङ्परयोः स्वनियम्यां छिद्वेति कृप्रत्ययान्तोऽन्तोदात्तः। षष्ठ्यन्तम् आमन्त्रितान्तं प्रति यत्कारकमिति। यद्यप्यामन्त्रितस्य द्रव्यवचनत्वान्न कारकापेक्षा तथापि आमन्त्रिततया धातुवाच्या क्रिया तस्यास्तदपेक्षास्तीति तत्कारकमित्यर्थः। पितर्मरुतामिति। अत्र मरुतामिति परपदं पूर्वस्य पितरित्यस्याङ्गवद्भवति। पितरित्यामन्त्रितनिघातेनानुदात्तं ततः परं मरुतामित्येतदप्यनुदात्तमेव भवतीत्यर्थः। अव्ययानां नेति। तेनोच्चैरधीयानेत्यत्रामन्त्रितस्य चेत्याद्युदात्तत्वं न। न च निषेधवैयर्थ्यम्। निपाता आद्युदात्ता इत्याद्युदात्तत्वस्यानिवारणादिति वाच्यम्। स्वरादिष्वन्तोदात्तयोरुच्चैर्नीचैःशब्दयोः पाठान्। अव्ययीभावस्य त्विति। अव्ययीभावस्येति अव्ययीभावस्याव्ययसंज्ञा। सूत्रे लुङ्मुखस्वरोपचारा इति गणनादन्यत्राव्ययसंज्ञाभावेनाव्ययानां नेति निषेधो न प्रवर्तत इति भावः। उपाग्न्यधीयानेति। पराङ्गवद्भावेनामन्त्रितस्येत्याद्युदात्तत्वम्।

এস্থলে শুভঃ এই পদটী শুভধাতুর উত্তর ক্বিপ্ প্রত্যয়ের পর ষষ্ঠী বিভক্তির দ্বারা সিদ্ধ হইয়াছে। তাহার অর্থাৎ শুভের পর শরীরে অনুপ্রবেশ বিষয়ে ষষ্ঠী বিভক্তি এবং আমন্ত্রিতপদের 'আদিবর্ণের উদাত্ত স্বর হয়। এস্থলে আষ্টমিক নিঘাত স্বর সঙ্কনীয় নহে, কারণ পাদের আদিস্থিত হইলে পূর্ব্ববর্ত্তী আমন্ত্রিত পদের অবিদ্যমানত্ব হয়। যথা, "যত্তে দিবো দুহিতর্ম্মর্ত্তভোজনম্"। এস্থলে দিবঃ শব্দের আষ্টমিক নিঘাত হইতেছে। "পরশুনা বৃশ্চন্"। ষষ্ঠ্যামন্ত্রিতকারকবচনম্। ০। অর্থাৎ ষষ্ঠী বিভক্ত্যন্ত ও আমন্ত্রিতান্ত বিষয়ে যে কারক, তদ্বাচক এইরূপ পরিগণন কর্ত্তব্য। সেইহেতু "অয়মগ্নে জরিতা"। "এতে নাগ্নে ব্রহ্মণা"। এইস্থলে হইল না। যথা, অথবা সমর্থানুবৃত্তিদ্বারা সিদ্ধ হইল। "পূর্ব্বাঙ্গবচ্চেতি বক্তব্যম্"। এস্থলে

८। उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य।८।२।४।

उदात्तस्थाने स्वरितस्थाने च यो यण् ततः परस्यानुदात्तस्य स्वरितः स्यात्। अभ्यभि हि। स्वरितस्य यतः। खलप्व्याशा। अस्य स्वरितस्य त्रैपादिकत्वेनासिद्धत्वाच्छेषनिघातो न।

---

८। अभ्यभीति। अभिशब्दे उपसर्गाश्चाभिवर्जमित्याद्युदात्तनिषेधात् फिट्स्वरेणान्तोदात्तः। अस्य नित्यवीप्सयोरिति द्वित्वं तस्य परमाम्रेडितम् अनुदात्तं चेति परस्यानुदात्तत्वं तस्मिन्नेव परे इकारस्योदात्तस्य यणि कृते उदात्तयणः परत्वादकारात्स्वरितः। खलपूशब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः। तस्य ओः सुपीति यण्। स उदात्तयण्। ततः परो ङिप्रत्ययः सुप्त्वादनुदात्तः। तस्यानेन स्वरितः। उदात्तयणो हल्पूर्वादित्युदात्तत्वं तु न। नोङ्धात्वोरिति निषेधात्। तस्य च स्वरितेकारस्य यणि ततः परस्याशाशब्दाकारस्यानेनैव स्वरितः। आशाशब्दो हि आशाया अदिगाख्या चेदित्यन्तोदात्तत्वादनुदात्तादिः। अस्येति। आशाशब्दप्रथमाकारस्थानिकस्येत्यर्थः। शेषेति। आशाशब्दस्य निघातो नेत्यर्थः। ननु यणादेशं प्रति स्वरितस्यासिद्धत्वात्स्थानिन्येव यण् प्रवृत्त औजढदित्यत्र हसशब्दे द्वित्वं प्रवर्तते न तु ढशब्दे न च स्वरितयणः परस्येत्याश्रयणात्सिद्धत्वं शङ्क्यम्। तथा सति उदात्तादनुदात्तस्य स्वरित इत्यनेन यत्र स्वरितः क्रियते तत्रापि स्यासिद्धत्वं न स्यात्। न चेष्टापत्तिः लक्ष्याविरोधात्। प्रत्यग्निरूषसामग्र्यमख्यदित्यादौ स्वरितादर्शनात्। न च नोदात्तस्वरितोदयमिति निषेधः शङ्क्यः। अन-

পরাঙ্গবৎ না হইয়া পূর্ব্বাঙ্গবৎ কার্য্য হয়। যথা, "আ তে পিতর্মরুতাম্"। "প্রতিত্বা দুহিতর্দিবঃ"। অব্যয় সকলের পূর্ব্বাঙ্গবৎ কার্য্য হয় না। যথা, "উচ্চৈরধীয়ান"। অব্যয়ীভাব সমাসের কিন্তু হইবে "উপাগ্ন্যধীয়ান"।

৮। এইস্থলে যোগবিভাগ করিতেছেন। যথা, উদাত্ত যণের পরস্থিত যে অনুদাত্ত স্বর তাহার স্থানে স্বরিত স্বর হয়। উদাত্তযন্—যথা, "অভ্যভি হি"। স্বরিত যণের উদাহরণ যথা, "খলপ্ব্যাশা"। অভিশব্দ অন্তোদাত্ত। তাহা পরে থাকাতে উদাত্ত ইকারের স্থানে যণ্ কৃত হইলে উদাত্তযণের পর হইয়াছে বলিয়া যকারের স্থানে স্বরিত স্বর হইল। খলপূঃ শব্দ কৃদুত্তরপদ প্রকৃতিস্বর দ্বারা অন্তোদাত্ত। তাহার স্থানে "ওঃসুপি" এই সূত্র দ্বারা যণ্ হয়, ঐ যণ্ উদাত্ত। তৎপরে ঙিপ্রত্যয় এবং সুপত্ব হেতু অনুদাত্ত হইল। তাহার স্থানে এই বর্ত্তমান সূত্র দ্বারা স্বরিত স্বর

९। एकादेश उदात्तेनोदात्तः। ८। २। ५।

उदात्तेन सहैकादेश उदात्तः स्यात्। 'वोऽश्वाः'। 'क्वावरं मरुतः'।

१०। स्वरितो वानुदात्ते पदादौ। ८। २। ६।

अनुदात्ते पदादौ पर उदात्तेन सहैकादेशः स्वरितो वा स्यात्। पक्षे

न्नरस्येति न्यायेनोदात्तादनुदात्तस्येति यत्र प्राप्तिस्तन्मात्रस्य निषेधात्। अन्यथा स्वलप्व्याश्राब्या अग्निर्याश्या अस्मानित्यादावपि निषेधापत्तिरिति वेद अत्राङ्गभाष्यकाराः। योगविभागः करिष्यते। उदात्तयणः परस्यानुदात्तस्य स्वरितो भवति। ततः स्वरितयणः, उदात्तयण इत्यनुवर्तते। उदात्तयण इत्येवं योऽभिनिर्वृत्तः स्वरितयणः परस्यानुदात्तस्य स्वरितः स्यादित्यर्थः। एवं चास्यैवाश्रयत्वात्सिद्धत्वं नान्यस्य।

९। एकादेश इति। उदात्तयोरेव स्थानित्वे आन्तरतम्यादेव सिद्धम्। अन्यतरस्यानुदात्तत्वे स्वरितत्वे वा आन्तरतम्यात् स्वरिते प्राप्ते विधिरयमिति ध्वनयन्नुदाहरणद्वयमाह। क वोऽश्वा इत्यादि। बहुवचनस्य वस्नसावित्यत्रानुदात्तं सर्वमपादादावित्यधिकारादिदम् अनुदात्तः। अश्वः। क्वनिति व्युत्पादनादश्वशब्द आद्युदात्तः। वमोऽरुत्वम्। उत्वम्। एङः पदान्तादतीति पूर्वरूपम्। क्वेति। किमोत् क्वातीति किमः क्वादेशः। तित् स्वरितम्। अवरशब्दः स्वाङ्गशिटामदन्तानामित्युदात्तः। तयोर्दीर्घ उदात्तः।

१०। स्वरितो। वीदमित्यादि। विशब्दो निपातत्वादाद्युदात्तः। इदंशब्दः फिट्स्वरेणान्तोदात्तः। तयोरेकादेशः स्वरितः। दिविशब्दे ऊडिदंपदादीति विभक्तिरुदात्ता। ईयते

---

বিহিত হইল। এস্থলে আশা শব্দের "আশায়া অদিগাখ্যা চ" এই সূত্রদ্বারা অন্তোদাত্তত্ব হেতু অনুদাত্তাদি হইতেছে। সুতরাং স্বরিত স্বরের ত্রৈপাদিকত্ব হেতু অসিদ্ধি হইতেছে। অতএব শেষটীর নিঘাত স্বর হইল না।

৯। উদাত্ত স্বরের সহিত একাদেশের উদাত্ত স্বরই হয়। (অর্থাৎ উভয় উদাত্তেরই স্থানিত্ব আন্তরতম্যতা প্রযুক্তই সিদ্ধ হয়। অন্য দুইটীর অনুদাত্তত্ব এবং স্বরিতত্বে আন্তরতম্য হেতু স্বরিত স্বরের প্রাপ্তি হইলে এইরূপ বিধান বুঝিতে হইবে)। যথা, "বোঽশ্বাঃ"। কাবরং মরুতঃ।

১০। অনুদাত্ত পদাদি পরে থাকিলে উদাত্তের সহিত একাদেশ স্বরিত স্বর বিকল্পে বিহিত হয়। বিকল্প পক্ষে, পূর্ব্ব সূত্র দ্বারা উদাত্ত স্বর হয়। যথা,

पूर्वसूत्रेणोदात्तः। 'वीश्द्‌ ज्योतिर्हृदये'। 'अस्य श्लोको दिवीयते'। व्यवस्थितविभाषात्वादिकारयोः स्वरितः। दीर्घप्रवेशे तूदात्तः। किं च 'एङः पदान्तात्' इति पूर्वरूपे स्वरित एव। तेऽवदन्। 'सोऽयमागात्'। उक्तं च प्रातिशाख्ये--'इकारयोश्च प्रश्लेषे क्षैप्राभिनिहतेषु च' इति।

---

ईङ् गतौ दिवादिः। तिङ्ङतिङ इति निहतम्। अत्रैकादेश उदात्तः। इकारयोः स्वरित इति। ह्रस्वेकारयोरेवेत्यर्थः। दीर्घप्रवेशे त्विति। दिवीयत इत्यत्र। उदात्त इति। एकादेश उदात्त इत्यनेन। इयं च बह्‌वृचानां व्यवस्थोक्ता। अन्येषामपि तदीयप्रातिशाख्यानुसारेण ज्ञेया। पूर्वरूपे इति। ते वदन्नित्यादौ। ते इति तच्छब्दः फिट्‌स्वरेणान्तोदात्तः जसः सुप्त्वादनुदात्तौ सुप्पिताविन्यनुदात्तः। तयोरेकादेश उदात्तः। अवदन्निति। वदेर्लङि प्रथमपुरुष-बहुवचनम्। ते इत्यतिङन्तात्परस्य तस्य तिङ्ङतिङ इति निघातः। सोऽयमिति। स इति तच्छब्दस्य प्रथमैकवचनम्। तच्छब्दः फिट्‌स्वरेणान्तोदात्तः। सु इति सुप्त्वादनुदात्तः। तस्य रुत्वे उत्वे गुणे च कृते एकादेशेनौकार उदात्तः। अयमितीदमः प्रथमैकवचनं फिट्‌स्वरेणान्तोदात्तम्। तयोरेङः पदान्तादिति पूर्वरूपे ओकारः स्वरितः। इकारयोश्च प्रश्लेष इति। ह्रस्वयोरिकारयोः सवर्णदीर्घे ह्रस्वयोर्यच सवर्णदीर्घः स प्रश्लेष इत्युच्यते। उदात्तस्वरितस्थाने यो यण् स क्षैप्रः सन्धिः। यत्र एङः पदान्तादिति स अभिनिहतसन्धिरुच्यते। तेषु स्वरितः स्वीक्रियत इत्यर्थः। वीदं ज्योतिः अर्प्सि हि तेऽवदन्निति क्रमेणोदाहरणानि।

"বীডদং জ্যোতিহৃ দয়ে"। "অস্য শ্লোকো দিবীয়তে"। ব্যবস্থিত বিভাষা হেতু উভয় ইকারেরই স্বরিত স্বর হয়। দীর্ঘ প্রবেশে কিন্তু উদাত্ত স্বর হয়। যথা, "এঙঃ পদান্তাৎ" এই সূত্র দ্বারা পূর্ব্বরূপ বিহিত হইলে স্বরিত স্বরই হইবে। "তেঽবদন্" "সোঽয়মাগাৎ"। প্রাতিশাখ্যে এইরূপ উক্ত হইয়াছে যে, উভয় ইকারের প্রশ্লেষ হইলে অর্থাৎ হ্রস্ব ইকার দ্বয়ের সবর্ণ দীর্ঘ কৃত হইলে যে স্থলে হ্রস্ব দ্বয়ের সবর্ণ দীর্ঘ হয়, তাহাকে প্রশ্লেষ বলে। উদাত্ত ও স্বরিত স্থানে যে যণ্ তাহাকে ক্ষৈপ্র সন্ধি বলে। যেস্থলে "এঙঃ পদান্তাৎ" এই সূত্রের কার্য্য হয়, তাহাকে অভিনিহত সন্ধি বলে। অতএব ইকার দ্বয়ের প্রশ্লেষে এবং ক্ষিপ্রাভিনিহত সন্ধি স্থলে স্বরিত স্বরই বিহিত হয়।০

११। उदात्तादनुदात्तस्य स्वरितः। ८। ४। ६६।

उदात्तात्परस्यानुदात्तस्य स्वरितः स्यात्। 'अग्निमी॑ळे'। अस्यासिद्धत्वाच्छेषनिघातो न। 'तमी॑शानासः'।

१२। नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्। ८। ४। ६७।

उदात्तपरः स्वरितपरश्चानुदात्तः स्वरितो न स्यात्। गार्ग्यादिमते तु स्यादेव। 'प्र य आरुः'। 'वोऽश्वाः'। 'क्वा३ भीषवः'।

११। उदात्तादनुदात्तस्य। अत्र तयोर्य्वाविचीत्यतः संहितायामित्यनुवर्तते। तेन पदकालेऽनुदात्तमेव। अग्निमीळे इति। अग्निशब्दः फिट्स्वरेण वान्तोदात्तः अमसुप्त्वादनुदात्तः। अमि पूर्व इति एकादेश उदात्तः। ईळे * इति तु ईड स्तुतौ लटि उत्तमपुरुषैकवचनम्। द्वयोश्चास्य स्वरयोर्मध्यमेत्य सम्पद्यते स डकारो * लकार इति वक्ष्यमाणेन प्रातिशाख्येन डस्य लः *। तिङ्ङतिङ इति निहतम्। ईकारस्य स्वरितः। न च मकारेण व्यवधानम्। स्वरविधौ व्यञ्जनमविद्यमानवदिति परिभाषणात्। एवं सर्वत्र ज्ञेयम्। ननु तित्स्वरितमित्यस्यानन्तरमिदं वक्तव्यम् एवं च स्वरितग्रहणं न कर्तव्यं भवतीत्याशङ्क्याह। अस्येति। यदि तत्र क्रियेत अनुदात्तं पदमेकवर्जमित्येतत् प्रवर्तेत इह प्रकरणे न प्रवर्तते स्वरितस्यासिद्धत्वात्। तेन द्वयोरप्युदात्तस्वरितयोः श्रवणं सिद्धम्। तमीशानास इति। तमिति तच्छब्दस्य द्वितीयैकवचनमन्तोदात्तम्। ईशानशब्दाज्जसि आज्जसेरसुगित्यसुगागमे कृते रूपम्। ईश ऐश्वर्येऽस्माच्छानच् चित्वादन्तोदात्तः। अमः सुप्त्वादनुदात्तत्वम्। ईकारस्य सकाराकारस्य च स्वरितत्वम्।

---

১১। উদাত্ত স্বরের পরস্থিত অনুদাত্ত স্বরের স্বরিত স্বর হয়। যথা, "অগ্নিমীলে"। ইহারও অসিদ্ধত্ব হেতু শেষ নিঘাত হইবে না। যথা, "তমীশানাসঃ"। এই সূত্রে অগ্নিশব্দ ফিট্ সূত্র দ্বারা বিকল্পে অন্তোদাত্ত এবং অম্ ও সুপ্ হইতেছে বলিয়া অনুদাত্ত হইতেছে। "অমি পূর্ব্বে" এই সূত্র দ্বারা একাদেশ কৃত হইলে উদাত্ত স্বর হইল। ঈলে এই পদটী ঈড়ধাতু লট উত্তম পুরুষের একবচন। দুই স্বরের মধ্যবর্ত্তী আদেশ হইল ডকারের স্থানে লকার থাকুর এবং ঈকারের স্বরিত স্বর হইল।

१३। एकश्रुति दूरात्संबुद्धौ। १। २। ३३।

दूरात्संबोधने वाक्यमेकश्रुतिः स्यात्। त्रैस्वर्यापवादः। 'आगच्छ भो माणवक'।

१२। नोदात्त। उदात्तस्वरितौ उदयौ यस्मादिति बहुव्रीहिः। उदयशब्दः परशब्देन समानार्थः प्रातिशाख्येषु प्रसिद्धः। लाघवार्थं परशब्दे प्रयोक्तव्ये मङ्गलार्थमुदयशब्दः प्रयुक्तः। तथा चोक्तं भाष्ये मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि च। वृद्ध्यादौ वृद्धिशब्दो मध्ये शिवशब्दः शिवमशमरिष्टस्यकर इति अन्ते चायमुदयशब्द इति पाणिनीये मङ्गलं कृतम्। प्रय आरुरिति। ये इति यच्छब्दस्य प्रथमाबहुवचनं फिट्स्वरेणान्तोदात्तम्। आरुरिति। ऋर्तेलिटि प्रथमपुरुषबहुवचनं झिः तस्य परस्मैपदानामित्युस् प्रत्ययस्वरेणोदात्तः। न च तिङ्ङतिङ इति निघातः शङ्क्यः। यद्वृत्तान्नित्यमिति निषेधात्। आकारस्योदात्तस्वरितपरस्येति'वक्ष्यमाणेन सन्नतरादेशः। बोऽश्वाः क्वेति। अत्रापि श्वेत्याकारस्य सन्नतरः। क्वेति किमीत् तित्स्वरितम्।

१३। एकश्रुति। सम्बोधनं सम्बुद्धिरित्यनेनान्वर्थस्य सम्बुद्धिशब्दस्य ग्रहणं न एकवचनं सम्बुद्धिरिति पारिभाषिकस्य। सति तु तस्य ग्रहणे आगच्छत देवा ब्राह्मणा इत्यत्र न स्यात्तदाह। दूरात्सम्बोधने इति। अन्वर्थग्रहणं च दूरादित्यनेन सम्बन्धाल्लभ्यते न ह्यामन्त्रितविभक्तेः दूरत्वमदूरत्वं च सम्भवति। सम्बोधनस्य तु क्रियारूपत्वादपादानत्वाद् दूरादिति विशेषणसम्भवः। दूरत्वं न देशस्वरूपमाश्रीयते अनवस्थितत्वात्। किं तर्हि सम्बोधनक्रियापेक्षया दूरत्वम्। यावति देशे प्रकृति प्रयत्नोच्चारितं सम्बोध्यमानेन न श्रूयते किं त्वधिकं प्रयत्नमपेक्षते तत्संबुद्धौ दूरं भवति। एकश्रुतिरिति। उदात्तादीनां स्वराणामविभागेनावस्थानमेकश्रुतिः। आगच्छेत्यादि। दूराद्धूते चेति वाक्यस्य टेः प्लुत उदात्तः प्रत्युदाहरणे त्रैस्वर्यमेव भवति। तत्राङुपसर्गाश्चाभिवर्जमित्याद्युदात्तः। गच्छेति तिङन्तस्य निघातः। भोशब्दो निपाता आद्युदात्ता इत्याद्युदात्तः। शेषस्यामन्त्रितनिघातः।

---

১২। উদাত্ত পর এবং স্বরিত পর এরূপ যে অনুদাত্ত তাহার স্বরিত হয় না। গার্গ্যাদি মতে কিন্তু নিশ্চয়ই হয়। "প্রয় আরুঃ"। "বোঽশ্বাঃ"। "ক্বাঽভীশবঃ"।

১৩। দূর হইতে সম্বোধন বিষয়ে যে বাক্য তাহাকে একশ্রুতি বলে। এইটী ত্রৈস্বর্য্যাপবাদ। যথা, "আগচ্ছ ভো মাণবক!"।

## १४ । यज्ञकर्मण्यजपन्यूङ्खसामसु । १ । २ । ३४ ।

यज्ञक्रियायां मन्त्र एकश्रुतिः स्याज्जपादीन् वर्जयित्वा । 'अग्निर्मूर्धा दिवः ककुत्' । 'यज्ञ—' इति किम् ? स्वाध्यायकाले त्रैस्वर्यमेव । 'अजप—' इति किम् ? 'ममाग्ने वर्चो विहवेष्वस्तु' । जपो नाम उपांशुप्रयोगः । यथा जले निमग्नस्य । न्यूङ्खा नाम षोडश ओकाराः । गीतिषु सामाख्या ।

---

१४ । यज्ञ । त्रैस्वर्येण वेदे मन्त्राः पठ्यन्ते तेषां यज्ञक्रियायामपि तथैव प्रयोगे प्राप्ते एकश्रुति-र्विधीयते । मन्त्र इति । एतच्चाजपेति पर्युदासाल्लभ्यते तेनोहादिषु न । अत एव स्वाहेन्द्रशत्रुर्वर्द्ध-स्वेति समासान्तोदात्तत्वे कर्तव्ये आद्युदात्तं प्रयुक्तमिति प्रसिद्धिः । जपादीनीति । जपन्यूङ्खसा-मानीत्यर्थः । अग्निर्मूर्द्धेति । अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वतीम् ३ । अङ्गेर्निर्नलोपश्चेति अग्निशब्दः प्रत्ययस्वरेण फिट्स्वरेण वान्तोदात्तः । मुर्वी बन्धने कनिन्युवृषितक्षिराजिधन्वीत्यतः कनिनि वर्तमाने श्वन्नुक्षन् पूषन्नित्यत्र मूर्द्धन्शब्दः कनिन्प्रत्यया-न्तोऽन्तोदात्तो निपातितः दिव्शब्दात्परस्य षष्ठ्येकवचनस्य ऊडिदम्पदादित्युदात्तत्वम् । ककुच्छब्दः प्रातिपदिकस्वरेणान्तोदात्तः । पातेर्डतिः । पतिशब्दः प्रत्ययस्वरेणाद्युदात्तः । प्रथेः षिवन् संप्रसारणं च षित्त्वान्ङीष् षष्ठेकवचनस्योदात्तयणो हल्पूर्वादित्युदात्तत्वम् । इदम्शब्दः प्राति-पदिकस्वरेणान्तोदात्तः । आप्नोतेः क्विप् ह्रस्वश्च । ऊडिदमिति विभक्तेरुदात्तत्वम् । रीङ्श्रुजिभ्यां तुड्‌ वसुन्प्रत्ययः नित्स्वरेणाद्युदात्तो रेतःशब्दः । जिन्वतीति । जिन्वतेः प्रीणनार्थस्य लिपि तिङ्ङतिङ इति निघातः । प्रणवष्टेरिति प्रयोगकाले प्रणवः । ममेत्यादि । युष्मदस्मदोर्ङ-सीत्याद्युदात्तत्वम् । अग्नेशब्दस्यामन्त्रितनिघातः । वर्चःशब्दोऽसुन्प्रत्ययान्तः विपूर्वात् ह्वयतेर्हः सम्प्रसारणं चेत्यप्प्रत्यये थाथादिसूत्रेणान्तोदात्तत्वम् ।

১৪। জপন্, ন্যূঙ্খ ও সামশব্দ পরে না থাকিলে অথবা জপ, ন্যূঙ্খ ও সামাদি ভিন্ন অর্থে যজ্ঞক্রিয়া বিষয়ে যে মন্ত্র তাহার একশ্রুতি স্বর হয়। বেদে উদাত্ত অনুদাত্ত ও স্বরিত ত্রিবিধ স্বর দ্বারা মন্ত্র সকল পঠিত হয় তাহা-দিগের যজ্ঞক্রিয়াতেও সেইরূপ প্রয়োগের প্রাপ্তি হইলে সেই স্থলে একশ্রুতি স্বরও বিহিত হইয়া থাকে। এস্থলে মন্ত্র শব্দ দ্বারা অজপা মন্ত্র বুঝাইতেছে, উহা পর্য্যুদাস নঞ্ দ্বারা লব্ধ হইতেছে। সেই হেতু উহাদি অর্থে হইবে না। অতএব "স্বাহেন্দ্র শত্রুর্বর্দ্ধস্ব" এস্থলে সমাসান্ত উদাত্তত্ব কর্ত্তব্য হইলে আদ্যুদাত্ত প্রযুক্ত হইবে এইরূপ প্রসিদ্ধি আছে। যথা, "অগ্নির্মূর্দ্ধা দিবঃ ককুৎ"। যজ্ঞকার্য্য না

१५। उच्चैस्तरां वा वषट्कारः। १। २। ३५।

यज्ञकर्मणि वौषट्छब्द उच्चैस्तरां वा स्यादेकश्रुतिर्वा।

१६। विभाषा छन्दसि। १। २। ३६।

छन्दसि विभाषा एकश्रुतिः स्यात्। व्यवस्थितविभाषेयम्। संहि-

---

१५। उच्चैस्तराम्। वषट्शब्देनात्र वौषट्शब्दो लक्ष्यते समानार्थत्वात्। द्वावपि हि तौ देवतासम्प्रदानकस्य दानस्य द्योतकौ। नन्वेवं प्रतिपत्तिलाघवार्थं वौषट्शब्द एव कुतो नोक्त इति चेदुच्यते—क्वचिदक्षरलाघवमाश्रीयते क्वचित्प्रतिपत्तिलाघवमिति। ननु वषट्कार इत्यत्र कारप्रत्ययो न स्यात् वर्णनिर्देशे हि स विहित इति चेत्सत्यम्। एतदेव ज्ञापयति समुदायादपि कारप्रत्ययो भवतीति। तेन एवकार इत्यादि सिद्धम्। उच्चैःशब्दोऽधिकरणप्रधानोऽपि तद्विशिष्टध्वनक्रियायां वर्तते। तेन क्रियाप्रकर्षादाम्प्रत्यय उदात्ततरो भवतीति भलितोऽर्थः। ब्रूहिप्रेष्येति सूत्रेण वौषट्शब्दस्यादेः प्लुत उदात्तो विहितः तदपेक्षयायमुदात्ततरोऽन्यस्य विधीयते। अन्ये तु स्वार्थिकस्तरबित्याहुः।

१६। विभाषा। वाग्रहणेऽनुवर्तमाने विभाषाग्रहणम् अच्छन्दसीति पदच्छेदेन तन्त्रादिना

बुঝাইয়া স্বাধ্যায়কাল বুঝাইলে কি হইবে? ত্রৈস্বর্য্য দ্বারাই সিদ্ধ হইবে। জপ্যাদি অর্থ বুঝাইলে কি হইবে? "মমাগ্নে বর্চ্চো বিহবেষস্তু"। মন্ত্রাদির উপাংশু (ঈষদন্তবহিষ্করণরূপ) প্রয়োগ করাকে জপ কহে। যেমন জলে নিমগ্ন ব্যক্তির হয়। ষোড়শ ওঁকারাত্মক মন্ত্রকে ন্যূঙ্খ বলে। উহা সামগীত মধ্যে সমাখ্যাত হইয়া থাকে।

১৫। যজ্ঞকর্ম্মে বৌষট্‌শব্দ বিকল্পে উচ্চৈস্তরাং অর্থাৎ উদাত্ততর ও একশ্রুতি স্বর হয়। এস্থলে বষট্‌শব্দ দ্বারা বৌষট্‌শব্দও লক্ষিত হইতেছে, কারণ উভয়ের অর্থ সমান। ঐ উভয় শব্দই দেবতা সম্প্রদানক দানবাচক। তবে প্রতিপত্তির লাঘবার্থ বৌষট্‌ শব্দ সূত্রমধ্যে না ধরিয়া বষট্‌শব্দের গ্রহণ করিলেন। মহর্ষি পাণিনির সূত্রনির্ম্মাণ কৌশল অতি চমৎকার। তিনি সূত্রের কোথাও বা অক্ষর লাঘব কোথাও বা প্রতিপত্তিলাঘব আশ্রয় করিয়াছেন।

১৬। বেদে বিকল্পে একশ্রুতি স্বর হয়। এই সূত্রে বিভাষা ব্যবস্থাবাচক।

সায়াং ত্রৈস্বর্যম্। ব্রাহ্মণ একশ্রুতির্বহ্‌বৃচানাম্। অন্যেষামপি যথাসম্প্রদায়ং ব্যবস্থা।

১৭। ন সুব্রহ্মণ্যায়াং স্বরিতস্য তুদাত্তঃ।১।২।৩৭।

সুব্রহ্মণ্যাখ্যে নিগদে 'যজ্ঞকর্মণি—' ইতি 'বিভাষা ছন্দসি' ইতি চ প্রাপ্তা একশ্রুতির্ন স্যাত্ স্বরিতস্যোদাত্তশ্চ স্যাত্। সুব্রহ্মণ্যোম্। সুব্রহ্মণি

ভাষায়ামপি বিধানার্থম্। অতএব শ্বেতো ধাবতি অলংবুসানাং যাতেতি ব্যর্থং বাক্যমিতি পস্পশান্তে ভাষ্যং তত্র শ্বেতেতিপ্রাতিপদিকস্বরেণান্তোদাত্তম্। ইত ইতি ইদংশব্দাত্তসিল্। ঊভিদমিত্যনেন শ্বেত ইতি বর্ণানাং নত্বেত্যাদ্যুদাত্তে প্রাপ্তে ঘৃতাদিত্বাদন্তোদাত্তম্। অলশব্দো নিপাতত্বাদাদ্যুদাত্তঃ বুসশব্দঃ প্রাতিপদিকস্বরেণান্তোদাত্তঃ। অলংবুসশব্দঃ ফিট্‌স্বরেণান্তোদাত্তঃ। তত্র বিভাষায়াং যদ্যেকশ্রুতির্ন স্যাত্তর্হি স্বরভেদে কথমেকবাক্যং ব্যর্থং স্যাত্।

১৭। ন। সুব্রহ্মণ্যাখ্যে নিগদে ইতি। অপাদবন্ধে গদির্বর্ততে। যথা গদ্যমিতি। নিঃশব্দঃ প্রকর্ষে। উচ্চৈরপাদবন্ধং যজুরাত্মকং যন্মন্ত্রবাক্যং পঠ্যতে স নিগদঃ। নিতরাং গদ্যত-

অর্থাৎ কেবল বা শব্দের গ্রহণ হইলে বিভাষার অনুবৃত্তি হইত, কিন্তু তাহা না করিয়া পুনর্বার বিভাষাপদের গ্রহণ করাতে বেদ ভিন্ন স্থলে অর্থাৎ "বিভাষা অচ্ছন্দসি" এইরূপ পদচ্ছেদ করিয়া তন্ত্রানুসারে ভাষায় অর্থাৎ লৌকিক প্রয়োগেও বিহিত হইবে, ইহা বুঝাইতেছে। অতএব "শ্বেতো ধাবতি" "অলম্বুসানাং পাতা" ইত্যাদি বাক্য ব্যর্থ, ইহা পস্পসান্তে ভাষ্যকার লিখিয়াছেন। সেস্থলে শ্বেত এইটী প্রাতিপদিক স্বর দ্বারা অন্তোদাত্ত হইবে। অলং শব্দ নিপাতসংজ্ঞক বলিয়া আদ্যুদাত্ত এবং বুস শব্দ প্রাতিপদিক স্বর বলিয়া অন্তোদাত্ত হয়। কিন্তু অলংবুস শব্দ ফিট্‌সূত্র দ্বারা অন্তোদাত্ত। যদি সেস্থলে বিভাষা দ্বারা একশ্রুতি না হয়, তাহা হইলে স্বরভেদে একবাক্যের ব্যর্থতা কেন হইবে?। সংহিতা বিষয়ে ত্রৈস্বর্য্য স্বর হয়। ঋগ্বেদীয় ব্রাহ্মণবিষয়ে একশ্রুতি হয়। এতদ্ব্যতীত অন্য স্থলে সম্প্রদায়ানুরূপ হইয়া থাকে।

১৭। সুব্রহ্মণ্য নামে প্রসিদ্ধ নিগদ অর্থাৎ উচ্চৈঃস্বরে পাদবন্ধরহিত অর্থাৎ

সাধুরিতি যত্। ন চ 'একাদেশ উদাত্তেনোদাত্তঃ' ইতি সিদ্ধে পুনরনেন-মুদাত্তবিধানং ব্যর্থমিতি বাচ্যম্। তত্রানুদাত্ত ইত্যস্যানুবৃত্তেঃ। 'অসাবিত্যন্তঃ *'। তস্মিন্নেব নিগদে প্রথমান্তস্যান্ত উদাত্তঃ স্যাত্। গার্গ্যো যজতে। ঞিত্বাত্প্রাপ্ত আদ্যুদাত্তোঽনেন বাধ্যতে। 'অমুষ্যেত্যন্তঃ *'। ষষ্ঠ্যন্তস্যাপি প্রাগ্বত্। দাক্ষেঃ পিতা যজতে। 'স্যান্তস্যোপোত্তমং চ *'। চাদন্তঃ। তেন দ্বাবুদাত্তৌ। গার্গ্যস্য পিতা যজতে। 'বা নামধেয়স্য' *। স্যান্তস্য নামধেয়স্য উপোত্তমমুদাত্তং বা স্যাত্। দেবদত্তস্য পিতা যজতে।

ইতি কর্মণি লৌ গদনইত্যপ্। তস্য চ সুব্রহ্মণ্যাশব্দোপলক্ষকত্বাত্ সুব্রহ্মণ্যাশব্দোঽপরিত্যক্ত-স্ত্রীলিঙ্গ এব নিগদবিশেষস্য নাম। সুব্রহ্মণ্যোমিতি। তত্র সাধুরিতি যত্। তিত্স্বরিতং যতোনাব ইতি তু ন তত্র দ্ব্যচ ইত্যনুবৃত্তেঃ টাপা সহৈকাদেশঃ স্থানেঽন্তরতম ইতি স্বরিতঃ। ততো নিপাতত্বাদাদ্যুদাত্তেন ওমিত্যনেন ওমাঙোশ্চেত্যুদাত্তস্বরিতয়োরেকাদেশঃ স্বরিত এবেতি হরদত্তাদয়ঃ। অসাবিতি। প্রথমান্তস্যোপলক্ষণং বদাচ। প্রথমান্তস্যেতি। গার্গ্য ইতি। গর্গাদিভ্যো যঞ্। অমুষ্যেতি। ষষ্ঠ্যন্তস্যোপলক্ষণম্। দাক্ষেরিতি। দক্ষশব্দাদপত্যেঽত ইঞ্। অত্রাপি ঞিত্ স্বরঃ প্রাপ্তঃ। স্যান্তস্যেতি। স্যেতি রূপং বিবক্ষিতং পূর্ববার্তিকারম্ভাত্। স্যশব্দান্তস্যোপোত্তমমন্ত্যশ্চেত্যয়মুদাত্তং ভবতি।

গদ্যাত্মক যজুরাত্মক মন্ত্রবাক্য বিষয়ে "যজ্ঞকর্ম্মণি" এবং "বিভাষা ছন্দসি" এই দুই সূত্র দ্বারা প্রাপ্ত একশ্রুতি স্বর হইবে না এবং স্বরিত স্বরের স্থানে উদাত্ত স্বর হইবে। যথা, "সুব্রহ্মণ্যোঽম্"। অসৌ ইত্যন্তঃ। ০। অর্থাৎ তাদৃশ নিগদার্থ বিষয়ে প্রথমান্ত পদের স্থানে উদাত্ত স্বর হয়। যথা, "গার্গ্যো যজতে"। এস্থলে ঞিত্ত্ব হেতু প্রাপ্ত আদ্যুদাত্ত এই সূত্র দ্বারা নিষিদ্ধ হইতেছে। অমুষ্যেত্যন্তঃ। ০। অর্থাৎ তাদৃশ নিগদার্থে ষষ্ঠ্যন্ত পদেরও পূর্ব্ববৎ অর্থাৎ অন্ত স্থানে উদাত্ত স্বর হয়। যথা, "দাক্ষেঃ পিতা যজতে"। "স্যান্তস্যোপোত্তমং চ" ০। স্যান্ত সংযোগান্ত উপোত্তম শব্দের আদি ও চকার দ্বারা অন্তবর্ণ উদাত্ত হয়। যথা, "গার্গস্য পিতা যজতে"। "বা নামধেয়স্য"। ০। সংযোগান্ত নাম বাচক উপোত্তম শব্দ বিকল্পে উদাত্ত হয়। যথা, "দেবদত্তস্য পিতা যজতে"।

१८। देवब्रह्मणोरनुदात्तः। १। २। ३८।

अनयोः स्वरितस्यानुदात्तः स्यात् सुब्रह्मण्यायाम्। "देवा ब्रह्माण आगच्छत"।

१९। स्वरितात्संहितायामनुदात्तानाम्। १। २। ३९।

स्वरितात्परेषामनुदात्तानां संहितायामेकश्रुतिः स्यात्। 'इमं मे गङ्गे यमुने सरस्वति'।

---

१८। देवब्रह्मणो। सुब्रह्मण्यायामेव देवा ब्रह्माण इति पठ्यते तत्र पूर्वेण स्वरितस्योदात्ते प्राप्तेऽनेनानुदात्तो विधीयते। देवा ब्रह्माण इति देवब्रह्मणोर्वैयधिकरण्ये द्वयोरप्याद्युदात्तत्वं ततः परस्यानुदात्तस्य स्वरितः। तस्यानेनानुदात्तः। आमन्त्रितनिघातस्तूत्तरस्य न। पूर्वामन्त्रिता-विद्यमानत्वेन पदात्परत्वाभावात्। यदा तु सामानाधिकरण्यं तदा विभाषितं विशेषवचने इति पूर्वस्य पक्षे विद्यमानत्वात् पदात्परत्वाद् ब्रह्माण इत्यस्य निघातोऽपि भवति। अस्मिन् पक्षे देव-शब्देवशब्दस्यैवानेनानुदात्तत्वं विधेयम्। ब्रह्मग्रहणन्तु न कर्तव्यम्।

१९। स्वरित। अनुदात्तानामिति। जातौ बहुवचनम्। तेनैकस्य द्वयोर्बहूनां च भवति। एकस्य पचति। द्वयोः अग्निमीळे पुरोहितम्। बहूनां तु मूल एव दर्शितम्। इमं मे इति। इदम्शब्दः प्रातिपदिकस्वरेणान्तोदात्तः। विभक्तिरनुदात्ता त्यदाद्यत्वेऽति पूर्वः। एकादेश उदात्तः। मे इत्यनुदात्तम्। अनुदात्तं सर्वमपादादाविव्यधिकारात्तस्य उदात्तादनुदात्तस्य स्वरितः। तस्मात्परेषां गङ्गे प्रभृतीनामनुदात्तानामेकश्रुतिः। सर्व एते आमन्त्रितनिघातानुदात्ताः। ननु मे इत्यस्य स्वरितस्य उदात्तविधायकं त्रिपादीस्थत्वादसिद्धं स्यात्। न च स्वरितादित्याश्रयासिद्धम्। क्व वः सुत्वं त्यादौ चरितार्थत्वादिति चेन्मैवम्। तस्यादित इत्यारभ्य नवसूत्र्याः स्वस्थानादुत्कृष्य शास्त्रान्ते भाष्यवार्तिकयोर्निवेशात्। न सुब्रह्मण्यायामिति सूत्रे स्वरितस्य तूदात्त इति वदता एव काण्डोत्कर्षस्य ज्ञापितत्वाच्च न च सुब्रह्मण्योमिति सिद्धः स्वरितोऽस्तीति वाच्यम्। तत्र एकादेश उदात्तेनेति सूत्रप्रवृत्तेरावश्यकत्वात्। तत्र ह्यनुदात्तग्रहणं नानुवर्तते।

---

১৮। সুব্রহ্মণ্যা অর্থ বুঝাইলে দেব ও ব্রহ্ম শব্দের উত্তর বিহিত স্বরিত স্বরের স্থানে পূর্ব্বসূত্র দ্বারা উদাত্ত স্বর প্রাপ্তি হইলে তাহার স্থানে অনুদাত্ত স্বর হয়। যথা, "দেবা ব্রহ্মাণ আগচ্ছত"।

১৯। সংহিতা বিষয়ে স্বরিত স্বরের পরবর্ত্তী অনুদাত্ত স্বরের একশ্রুতি স্বর হয়। যথা, "ইমং মে গঙ্গে যমুনে সরস্বতি"।

२०। उदात्तस्वरितपरस्य सन्नतरः। १। २। ४०।

उदात्तस्वरितौ परौ यस्मात्तस्यानुदात्ततरः स्यात्। 'सरस्वति शुतुद्रि'। 'व्यचक्षयत्स्वः'। 'तस्य परमाम्रेडितम्'।

२१। अनुदात्तं च। ८। १। ३।

द्विरुक्तस्य परं रूपमनुदात्तं स्यात्। 'दिवेदिवे'।

इति साधारणस्वराः।

२०। उदात्त। सन्नशब्देन नीचैरर्थ उच्यते। तेन त्वनुदात्तत्वं लक्ष्यते इत्याह। अनुदात्ततर इति। प्रकर्षस्त्वन्यानुदात्तापेक्षः। सरस्वतीत्यादि। अत्र सेशब्दमाश्रित्य सरस्वतीत्यस्यामन्त्रितनिघातः। शुतुद्रिशब्दस्य तु न पादादित्वात्। आमन्त्रितस्येति षाष्ठि न शुतुद्रीत्यस्योदात्तं प्रथममक्षरं तस्मिन् परे पूर्वस्य सरस्वतीकारस्य सन्नतरः। व्यचक्षयत्स्व इति। वीति उपसर्गत्वादाद्युदात्तः ततः परस्यात्चक्षयदिति तिङन्तस्य तिङ इति निघातः स्वरिति त्यङ्स्वरौ स्वरिताविति स्वरितः तस्मिन् परे यकारस्य सन्नतरः।

२१। साधारणस्वरा इति। एकस्मिन् पदे पदद्वयेऽपि च वर्तमानात्साधारणम् आद्युदात्तम्। अनित्यादिर्नित्यमित्यादयस्तु एकस्मिन्नेव पदे वर्तमानान्न साधारणाः।

২০। সন্নশব্দে নীচৈঃ বুঝায়। অতএব তাহার অনুদাত্তত্ব লক্ষিত হইতেছে। (সন্নতর অর্থাৎ অনুদাত্ত) যাহার (যে অনুদাত্তের) পর উদাত্ত ও স্বরিত স্বর বিহিত হয়, সেই অনুদাত্ত স্বরের স্থানে অনুদাত্ততর স্বর হয়। যথা, "সরস্বতি শুতুদ্রি"। "ব্যচক্ষয়ৎস্বঃ"। দ্বিরুক্তের পরবর্ত্তী রূপটী আম্রেড়িত সংজ্ঞক হয়।

২১। দ্বিরুক্ত ধাতুর পরবর্ত্তী রূপ অনুদাত্ত হয়। যথা, "দিবেদিবে"। একপদে অথবা পদদ্বয়ে বর্ত্তমান হেতু সাধারণস্বরও আদ্যুদাত্ত হইতেছে। কিন্তু "ক্রিত্যাদি নিত্যং" ইত্যাদি স্থানে একপদে বর্ত্তমান হেতু উহা সাধারণ নহে।

ইতি সাধারণস্বরাঃ।

---

# धातुस्वराः।

## १। धातोः। ६। १। १६२।

अन्त उदात्तः स्यात्। 'गोपायतं नः'। 'असि सत्यः'।

## २। स्वपादिहिंसामच्यनिटि। ६। १। १८८।

स्वपादीनां हिंसेश्चानिट्यजादौ लसार्वधातुके परे आदिरुदात्तो वा स्यात्। स्वपादिरदाद्यन्तर्गणः। स्वपन्ति। श्वसन्ति। हिंसन्ति। पक्षे प्रत्ययस्वरेण मध्योदात्तता। 'क्लिन्त्येवेष्टर्यन्त'। मैत्र। स्वपानि। हिनसानि।

---

प्रकृतिर्द्विधा धातुः प्रातिपदिकं च। तत्र धातुस्वरानाह।

१। धातोरिति। कर्षात्वत इत्यतः अन्त उदात्त इत्यनुवर्तते तदाह। अन्त उदात्त इति। गोपायति। यकाराकारस्योदात्तत्वे तमित्यस्य तास्यनुदात्तत्वे उदात्तादनुदात्तस्येति स्वरितः। बहुवचनस्य वससाविति नसादेशस्य स्वरितात्संहितायामिति प्रचयापरपर्यायाः एकश्रुतिः। असीति। अस्तेः सिप् तासस्त्योरिति सलोपः। अकारस्योदात्तत्वम्। ततः परस्य स्वरितः। सत्यशब्दे सकारात्परस्य उदात्तस्य स्वरितपरस्य उदात्तस्वरितपरस्येत्यनुदात्ततरादेशः।

२। स्वपादि। तास्यनुदात्तेदित्यतः लसार्वधातुकमित्यनुवर्तते तदच्यनिटीति सप्तम्यादिदं सप्तम्यन्तं सम्पद्यते तदाह। अनिट्यजादावित्यादि। अदाद्यन्तर्गण इति। आगणान्तादिति भावः। हिंसन्तीति। हिसि हिंसायां रुधादिः। श्नसोरल्लोपः। श्नसोरल्लोपः। क्लिन्त्येवेष्ट्यन्त इति। वृत्तानुरोधादेतदुक्तम्। भाष्ये तु प्रायेणेदं न दृश्यते। एवं च हिनसानीत्यत्राद्युदात्तत्वमपि पक्षे भवति। यदि तु आद्युदात्तत्वं पक्षे नेष्यते तर्हि व्यवस्थितविभाषाश्रयणान्न। केचित्तु स्वपादौ त्वेवैतदभावे धातुस्वरेणाद्युदात्तमेवेति विशेषाभावादयं विधिर्न प्रवर्तत तस्मादुचर्याहिन-

০। প্রকৃতি দুই প্রকার। ধাতু ও প্রাতিপদিক। এস্থলে প্রথমতঃ ধাতু স্বর বর্ণিত হইতেছে। পশ্চাৎ প্রকৃতিস্বর বর্ণিত হইবে।

১। বৈদিক ধাতুর অন্ত্য বর্ণের উদাত্ত স্বর হয়। যথা, "গোপায়তং নঃ"। "অসি সত্যঃ"। "কর্ষাৎ ত্বতঃ" এই পূর্ব্বোক্ত সূত্র হইতে "অন্ত উদাত্ত" পদের অনুবৃত্তি আসিল।

২। অনিট্ ও অজাদি সার্ব্বধাতুক লকার (লুঙ্, লিট্, লুট্, লৃঙ্, আশীর্লিঙ্ ও লৃট্ বিভক্তি) পরে থাকিলে স্বপাদি ধাতুর ও হিংস ধাতুর আদি বর্ণ বিকল্পে উদাত্ত হয়।

३। अभ्यस्तानामादिः। ६। १। १८९।

अनित्यजादौ लसार्वधातुके परे अभ्यस्तानामादिरुदात्तः। 'ये ददति प्रिया वसु'। परत्वाच्चित्स्वरमयं बाधते। 'दधाना इन्द्रे'।

४। अनुदात्ते च। ६। १। १९०।

अविद्यमानोदात्ते लसार्वधातुके परेऽभ्यस्तानामादिरुदात्तः। 'दधासि रत्नं द्रविणं च दाशुषे'।

---

सार्वधात्वायं न प्रवर्तत इति वृत्तिकारास्त्वयं कल्पयन्ति। छिनसानीति। अत्र श्नमस्तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति न्यायाद् धातुग्रहणे नकाराकार उदात्तः। ततः परस्य स्वरितत्वम्। अनिटि किम्? स्वपितः। रुदादिभ्यः सार्वधातुक इतीट्।

३। अभ्यस्तानाम्। आदिः सिचीऽन्यतरस्यामित्यतः आदिरिति वर्तमाने पुनरादिग्रहणं नित्यार्थम्। अन्यथाऽऽदिग्रहणसम्बन्धमन्यतरस्यांग्रहणमनुवर्तेत। अचि किम्? दद्यात्। अनिटि किम्? जक्षिम। ये ददतीति। डुदाञ् दाने लटि झिः तस्मादभ्यस्तादित्यदादेशः। श्नाभ्यस्तयोरित्यालोपः। 'चित्स्वरमिति। चित इत्यनेन विहितमन्तोदात्तस्वरमित्यर्थः। दधानेति। लटः शानजादेशः।

४। अनुदात्ते च। न विद्यते उदात्तो यस्मिन्निति बहुव्रीहिस्तदाह। अविद्यमानेत्यादि

স্বপাদি ধাতু অদাদিগণীয়। যথা, "স্বপন্তি। শ্বসন্তি। হিংসন্তি"। বিকল্প পক্ষে প্রত্যয় স্বরানুসারে মধ্য বর্ণের উদাত্ত স্বর হইবে। "কৃঙিত্যেবেষ্যতে"। অর্থাৎ কিৎ ঙিৎ পরেই উক্ত স্বর হইবে। এইটী বৃত্তিকারের মত, কিন্তু ভাষ্যে এরূপ প্রায় দেখিতে পাওয়া যায় না। স্বপানি। ছিনদানি। এই উভয় স্থলে নকার ও আকার উদাত্ত। অবশিষ্টবর্ণে স্বরিত স্বর। অনিট্ না হইয়া সেট্ হইলে কি হইবে? স্বপিতঃ এস্থলে "রুদাদিভ্যঃ সার্ব্বধাতুকে" এই সূত্র দ্বারা ইট্ হইল।

৩। অনিট্ অথচ অজাদি সার্ব্বধাতুক লকার বিভক্তি পরে থাকিলে অভ্যস্ত ধাতুর আদিবর্ণ উদাত্ত হয়। যথা, "যে দদতি প্রিয়াবসু"। পরত্ব হেতু চিৎস্বরকে অর্থাৎ "চিতঃ" এই সূত্র দ্বারা বিহিত যে অন্তোদাত্ত স্বর, তাহাকে বাধা দিতেছে। যথা, "দধানা ইন্দ্রে"।

৪। যাহাতে উদাত্ত স্বর নাই এরূপ সার্ব্বধাতুক লকার বিভক্তি পরে থাকিলে

५। भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात् पूर्वं पिति। ६। १। १९२।

भीप्रभृतीनामभ्यस्तानां पिति लसार्वधातुके परे प्रत्ययात्पूर्वमुदात्तं स्यात्। 'यो॑ऽग्निहो॒त्रं जु॒होति॑'। 'म॒मत्तु॑ न॒: परि॑ज्मा'। 'मा॒ता य॒द्वीरं॑ द॒धन॑त्'। 'जग॒र्षि त्वम्'।

अन्यथा हि शास्त्रीयेऽनुदात्ते गृह्यमाणे मा हि स्म दधादित्यत्र नित्यत्वादन्तरङ्गत्वाद्वा इकारलोपे कृते आद्युदात्तत्वं न स्यात्। बहुव्रीहौ विज्ञाते तु भवति हिशब्दो हि चेति निघातनिषेधार्थः।

५। भीह्री। आद्युदात्तस्यापवादोऽयम्। तत्र मदिर्दिवादिः। दरिद्राजागरावदादी। अन्ये तु जुहोत्यादयः। उदाहरणानि बिभेति जिह्रेति बिभर्ति। भृञामिदित्यभ्यासस्येत्वम्। ममत्त्विति। मदेर्लोट्। बहुलं छन्दसीति शपः श्लुः। जजनत्। दधनदिति। जन जनने धन धान्ये। आभ्यां लेट् तिप् इतश्चेतीकारलोपः। लेटोऽडाटावित्यट्। दरिद्राति जागर्ति। पितीति किम्? दरिद्रति। अत्र परत्वादाकारलोपे कृते इकारस्योदात्तत्वं माभूत्। ननु पूर्वग्रहणं व्यर्थं प्रत्यये पितीत्येषोक्ते तस्मिन्निति निर्दिष्टे इति पूर्वस्यैव भविष्यति। न च पितः पूर्वमेव कार्यभाग्यथा स्यात् पिदन्तं माभूदित्येवमर्थं तदिति वाच्यम्। कथं पुनः सप्तमीनिर्देशे तदन्तस्य प्रसङ्गः। एतदेव ज्ञापयति सौवर्यः सप्तम्यस्तदन्तसप्तम्य इति। तेनोपोत्तमं रितीति रित्प्रत्ययान्ते उपोत्तममुदात्तं भवति चङ्न्यतरस्यां चङन्तस्येत्यर्थो न तु रिति परतश्चङि परत इति। नन्वेवं चतुरः शसीत्यत्रापि शसन्तस्य प्राप्नोति शस्ग्रहणसामर्थ्यान्न भविष्यति। यदि हि चतुरः शसीत्यनेन शस उदात्तत्वमिष्टं स्यात्तत उडिदंपदादित्यस्यानन्तरं चतुरश्चेत्येव ब्रूयात्। तत्रासर्वनामस्थानग्रहणानुवृत्त्या षट्त्रिचतुर्भ्यो हलादिरिति हलादेरुदात्तविधानाच्च शस एव भविष्यति।

---

অভ্যস্ত ধাতুর আদিবর্ণ উদাত্ত হয়। যথা, "দধাসি রত্নং দ্রবিণং চ দাশুষে"। অন্যথা হি শব্দের শাস্ত্রীয় অনুদাত্তত্ব গৃহীত হইলে "মা হি স্ম দদ্যাৎ" এই স্থলে নিত্যত্ব ও অন্তরঙ্গত্ব হেতু বিকল্পে ইকারের লোপ করিয়া আদি বর্ণের উদাত্ত স্বর হইবে না, কিন্তু সেস্থলে বহুব্রীহি সমাস হইয়াছে জানিতে পারিলে হইবে। এস্থলে হি শব্দ নিঘাতনিষেধার্থঃ।

৫। পিৎসংজ্ঞক সার্ব্বধাতুক ল বিভক্তি পরে থাকিলে ভী, হ্রী, ভৃ, হু, মদ,

६। लिति। ६। १। १९३।

प्रत्ययात्पूर्वमुदात्तम्। चिकीर्षकः।

७। आदिर्णमुल्यन्यतरस्याम्। ६। १। १९४।

अभ्यस्तानामादिरुदात्तो वा णमुलि परे। लोलूयं लोलूयम्। पक्षे लित्स्वरः।

६। लिति। पूर्वसूत्रात्प्रत्ययात्पूर्वमिति वर्तते तदाह। प्रत्ययात्पूर्वमिति। तेन स्वरविधौ समम्यास्तदन्तत्वज्ञापनात् लिदन्तस्य स्वरो न शङ्कनीयः। चिकीर्षेति। सन्नन्ता ण्वुल् तस्याकादेशः। सनोऽतो लोपः। ककारेकार उदात्तः नचाल्लोपस्य स्थानिवत्त्वम्। स्वरविधौ तन्निषेधात्। क्वचित् पुस्तके भौरिकिविधम्। ऐषुकारिभक्तमिति दृश्यते। तत्र भौरिक्याद्यैषु कार्य्यादिभ्यो विधल्भक्तलाविति विषयो देश इत्यस्मिन्नर्थे यथाक्रम भौरिकिशब्दादैषुकारिशब्दाच्च विधल्-भक्तलौ ज्ञेयौ।

७। आदिर्णमुलि। अभ्यस्तानामिति। यद्यपि लोलूयमिति प्रतीकमुपादाय एकाच्सु धातुषु लित्स्वरस्यास्य च विशेषाभावादनेकाजुदाहृत इति हरदत्तग्रन्थादभ्यस्तानिति निवृत्तमिति प्रतीयते तथाप्यार्थिकार्थकथनपरतया नेयम्। णमुलि पर इति। यद्यपि सौवर्य्यः समभ्यस्तदन्तसमस्य इति भीह्रीति सूत्रे व्यवस्थापितत्वात् णमुलन्तस्यादिरुदात्तो भवतीति सूत्रार्थेन भाव्यं तथापि फले विशेषाभावादेवमुक्तमिति प्रतिभाति। लोलूयं लोलूयमिति। यङन्तात्णमुल्। नित्यवीप्सयोरिति द्वित्वम्। अत्र प्रथमः लोलूयशब्दः आद्युदात्तः। लू इति स्वरितः। ततः चत्वारः प्रत्ययाः।

---

জন, ধন, দরিদ্রা ও জাগৃ ধাতুর প্রত্যয়ের পূর্ব্ব বর্ণ উদাত্ত হয়। যথা, "যোঽগ্নি-হোত্রং জুহোতি"। "মমত্তু নঃ পরিজ্ম"। "মা ত্বা গন্ধীরং দধনৎ"। "জাগর্ষি ত্বম্"। ইত্যাদি।

৬। লকারইৎপ্রত্যয় পরে থাকিলে ধাতুর উত্তর প্রত্যয়ের পূর্ব্ব বর্ণ উদাত্ত হয়। যথা, "চিকীর্ষকঃ"।

৭। ণমুল্ প্রত্যয় পরে থাকিলে অভ্যস্ত ধাতুর আদি বর্ণ বিকল্পে উদাত্ত হয়। যথা, "লোলূয়ং লোলূয়ম্"। বিকল্প পক্ষে লিৎস্বর হয়।

८। अचः कर्त्तृयकि। ६। १। १९५।

उपदेशेऽजन्तानां कर्त्तृयकि पर आदिरुदात्तो वा। लूयते केदारः स्वयमेव।

९। चङ्यन्यतरस्याम्। ६। १। २१८।

चङन्ते धातावुपोत्तममुदात्तं वा। 'मा हि चीकरताम्'। धात्वकार उदात्तः। पक्षान्तरे चङुदात्तः।

इति धातुस्वराः।

८। अचः। इह कार्य्यन इत्यादौ इत्वे रपरत्वे च सति अयं स्वर इष्टस्तन्निर्वाहार्थं तास्यनुदात्तेदिति सूत्रे समासैकदेशोऽप्युपदेशशब्द इहानुवर्त्तते सप्तम्या च विपरिणम्यते तदाह। उपदेशेऽजन्तानामिति। नन्वेवम् एकं द्वादशधा जज्ञे इत्यादाविवान्तर्भूतण्यन्तात्कर्मकर्तृविषयात् जनेर्लटि जायते स्वयमेवेत्यत्रैव स्वरो न स्यात्। ये विभाषेत्यात्वे सति उत्तरकालमजन्तत्वेऽपि उपदेशेऽनजन्तत्वादिति चेन्नैवम्। ये इति विषयसप्तमीमाश्रित्य प्रत्ययोत्पत्तेः प्रागेवात्वप्रवृत्तेरित्याहुः। कर्तृयकीति। कर्तृवाचिनि सार्वधातुके विहितो यो यक् तस्मिन् परे। लूयत इति। आदिमध्यौ पर्य्यायेणोदात्तौ तास्यनुदात्तेति ते इत्यस्यानुदात्तत्वम्।

९। चङ्यन्यतरस्याम्। उपोत्तमं रितीत्यतः उपोत्तममिति वर्त्तते तदाह। उपोत्तममिति। त्र्यादीनामन्त्यमुत्तमं तस्य समीपमुपोत्तमम्। मा हि चीकरतामिति। अदुपदेशात्परत्वेन लसार्वधातुकानुदात्तत्वे कृते चङ एव स्वरे प्राप्ते पक्षे धात्वकार उदात्तः। उपोत्तमग्रहणानुवृत्त्या द्वयोर्न मा हि दधत्। अत्र विभाषा धेट्श्व्योरिति चङ्।

इति धातुस्वराः।

---

৮। কর্তৃবাচ্যে বিহিত যক্ প্রত্যয় পরে থাকিলে উপদেশ বিষয়ে অজন্ত ধাতুর আদি বর্ণের বিকল্পে উদাত্ত স্বর হয়। যথা, "লূয়তে কেদারঃ স্বয়মেব"।

৯। চঙ্ প্রত্যয়ান্ত ধাতু পরে থাকিলে উপোত্তম (অর্থাৎ ত্র্যাদি শব্দের অন্তভাগকে উত্তম বলে এবং তাহার সমীপকে উপোত্তম বলে) বর্ণ বিকল্পে উদাত্ত হয়। যথা, "মা হি চীকরতাম্"। পক্ষে ধাতুর অকার উদাত্ত হয়। পক্ষান্তরে চঙ্ও উদাত্ত হয়।

ইতি ধাতুস্বরাঃ।

